अनुकम्। अस्मिन् घोरतमे कलौ ममस्थितिप्रयोजनाभावान्मां निज-
लीलां नय। तदा भगवानाह। मल्लीलास्थदैवजनोद्धारार्थं ममाऽऽस्या-
वतारोऽग्निः श्रीवल्लभो भविष्यति, तदुपदेशार्थं तावत्त्वमत्र तिष्ठ, ततोऽहं
ब्रह्मसरसि महात्मा योगबलेन सह तत्रैवाप्यतिष्ठम्। अत्रान्तरे रुद्र-
सम्प्रदाये प्रभुर्विष्णुस्वामी सिंहासनेऽभिषिक्तस्तस्य शिष्या बहवो
जातास्ते चाऽपि यदा शाक्ताऽसुपाणिभिर्वेतिसैन्यैर्दुःखिता गुरवे दुः
खमचकथन्। स च महेशांशो महेश्वरं दध्यौ। तं देव आह, त्वमप्येवं-
विधस्वपदं कुरु। निजशिष्येभ्यो गोपालमन्त्रमुपदिश्य वार्णिनः कृत्वा
सैन्यं बधान। इत्युक्त्वान्तर्हिते देवे मार्कण्डेयक्षेत्रं गत्वा तेन तथा
कृतम्। ततोऽस्य विजयोत्स्वरा संभूता। ततोऽसौ दिग्विजयाय निर्गतः।
तत्र तत्र निजधर्मस्थापनाय निजाऽऽम्नायविज्ञवरान् बिल्वमङ्गलं भ-
र्तृश्रीकान्तकर्मश्रीकान्तमिश्रौ सत्त्वबोधिपण्डितं सोमगिर्यादीन् यती-
श्वरहर्य्यादीन् नरसिंहभक्तान् विधाय, जनार्दनक्षेत्रे श्रौतानेर्धि निज-
शिष्यं निजसिंहासनेऽभिषिच्य द्विजगोपालं गतः परमहंसो वैकुण्ठ-
मवाप। ततस्तत्पारम्पर्ये गोविन्दाचार्यशिष्यो भवदीयो वल्लभो जातः।
प्रेमाकरशिष्यो लक्ष्मणः। अथ भवान् हरेराज्ञातो मत्तः संप्रदायं
गृहीत्वाऽऽचार्यपदं प्राप्तो धर्मं प्रचारयतु। इति श्रीबिल्वमङ्गलाचार्यैः
समुक्ताः श्रीवल्लभाचार्यास्ततोऽष्टादशाक्षरं संप्रदायरहस्यं च गृहीत्वा
प्रणम्य पुनर्दर्शनं देयमित्युक्त्वा विसर्जयांबभूवुः। ततो मुनिरसौ वृन्दा-
वनं गत्वा निजां वेणुधरगोकुलेशमूर्तिं निजशिष्याय हरिब्रह्मचारिणे
समर्प्य तीर्थराजं प्रयागं गतः॥

इति द्वितीयोऽवच्छेदः।

ततः श्रीवल्लभाचार्याः कतिपयदिनानि तत्र स्थित्वा नृपाया-
ऽकथयन्। वयं तीर्थं यास्यामः। ततो नृपः समागत्य प्रार्थनां कृतवान्।

श्रीमतां गमने मम जीवनं कथम्। किंच मया कर्त्तव्यम्। तदा तै-र्भागवता धर्मा राजधर्माश्चोपदिष्टाः, नित्यार्चनकृते चरणपादुके दत्ते, राजा च सर्वानाहूय महतोत्सवेन तानयापयत्। तद्रक्षार्थं-द्विशतसात्त्वतवीरध्वजिन्यो न्ययोजयत्। छत्रचामरादिराजवि-भूतयो देवविभूतयः प्रेषिताः। आचार्यास्तान् पृष्ठतः कृत्वा दामोदरा-दिभिः पम्पां प्रति सस्रुः। तत्सविधे शूकरक्षेत्रान्मेघनकृष्णदासक्षात्रियः प्रयागं समेत्य, दामोदरहस्ते ताम्रपात्रं निरीक्ष्य, विद्यापुरजयं श्रुत्वा, भग वदवतारो जात इत्यनुमाय, द्रुतमाचार्यानुपेत्य, पादयोर्निपतितः। तत आचार्यैः समुत्थाप्य कुशलं पृष्ट्वा तस्मै निजमनुमाले दत्ते। अथ पम्पायां समागताः। तत्राचार्या दिवसत्रयेण श्रीभागवतपारायणं चक्रुः। तत्र वने तृषार्त्तस्य पक्षिण उपरि कृष्णदासेन गुरुपादुकोदके दत्ते स दिव्यकायो भूत्वा विमानमारुह्य पश्यत्सु जनेषु वैकुण्ठं गतः। ततः प्रसन्नैर्दामोदरा-दिभिः कृष्णदासायाचार्यपूजनसमये छत्राधिकारो दत्तः। शम्भुभट्टाय पूजाधिकारश्च। शेषाधिकारा यथावत्स्थापिताः। ततश्चलिता ऋष्यमूकं समागताः। तत्राचार्यपूजायां जायमानायां छत्रचामरमायूरव्यजनशङ्ख-चक्रकेतुध्वजेषु विद्योतमानेषु आलोकशब्देषु समुदीर्यमाणेषु शङ्खघ-ण्टादिषु नदत्सु विरक्तवैष्णववरूथिन्या चरन् श्रीरामदासः समागतः। कोऽयमाचार्यवेषोऽसांप्रदायिकश्चेन्निरोद्धव्य इति निजानाह। ते च तथा-समागताः। अत्रत्या अपि केतुप्रभृतयो युद्धाय सन्नद्धास्तदा स पुनराह कलहं मा कुरुथ ज्ञापयथ वृत्तं तदा शम्भुराह। विष्णुस्वामिसंप्रदाय-प्रवर्त्तकाः प्रेमाकराचार्यछात्रवर्याचार्यलक्ष्मणदीक्षितनन्दना जितविद्या-नगराविद्वत्सभायां स्थापितवैष्णवसद्धर्माः श्रीवल्लभाचार्या अमी विजय-न्ते। इति श्रुत्वा स समेत्याचार्यपादयोर्निपपात। तत आचार्यै राममन्त्रमहि-मा भक्तिधर्मश्च तस्मै श्रावितस्ततः प्रस्थिताः कुमारपदं समेत्य व्याससूत्र-

कथा कृता।तत्र अन्तस्तद्धर्मसूत्रव्याख्याने विष्णोरन्तर्यामित्वसाधने कुमारपादादयःशिष्यतां भेजुः। अथ मध्याह्ने कश्चित्कापालिको भोगिकायस्तिलकादीन् विहस्याऽऽह। योगिनां चन्द्रसूर्यादिगतिनिरोधसामर्थ्यमस्माकं भवतां किम्। तदाचार्यशिष्यः शम्भुस्तस्य कायनिरोधं कृतवान्। स नतो दीनतरो जातः कायनिरोधान्मुक्तो लज्जितो निजनिकेतं गतः। ततो व्यङ्कटे समागतास्तत्रत्याचार्यैराचार्यपूजया सत्कृतास्तदीशं प्रणम्य, पारायणं कृत्वा, तन्निवेदितं गृहीत्वाऽऽचार्याश्चेलुः। कामकोष्णीं भूतिमागताः। तत्र परमानन्दाचार्यादयो मिलितास्ते चाहुरियमेव प्रेमधूलिविष्णुस्वामिनो जन्मभूः श्रीरामानुजस्य चेति। ततः काञ्च्यां प्राप्तास्तत्रैकाम्बरेश्वरं नत्वा स्तुत्वा वेगवत्यां स्नात्वा श्रीवरदराजनिलयं समागताः। तत्राष्टपदीगद्यपद्याङ्कितसोपानालीं निरीक्ष्य स्थितान् वरदराजः संबोध्य तदधोदेशे वेदिकायां निजाचार्यैराचार्यसत्कृत्याऽभ्यनयत। ततस्तं प्रणम्य संपूज्य पारायणं कृत्वा प्रसादान्नं भुक्त्वा तीर्थयात्रामकुर्वन्।तत्र चक्रवर्तिनृसिंहाचार्यशिष्या नीलकण्ठाचार्यशिष्याश्च विवादायागतास्तत्राचार्यैर्ब्रह्मवादे स्थापिते शिवकेशवयोरीश्वरत्वे च परस्परं कलहं कुर्वन्तो गताः॥ आचार्यास्ततश्चलिताश्चिदम्बरं समागताः। तत्रोमेशं नत्वा, श्रीशंकराचार्य इह जात इति तत्कथामुक्त्वा, दक्षिणद्वारकां समागतास्तत्र विष्णुस्वामिसाम्प्रदायिकैराचार्यपूजनं कृतम्। जयकथा सद्धर्मश्च पृष्ट आचार्यैस्तन्निरूपितम्। ततस्तृतीयेऽह्नि चलिताः। स्थितास्तत्र राघवाचार्यादय आचार्यविजयं प्रशस्य द्वैताद्वैतवादे पराजिताः समाधिभाषाप्रामाण्ये संदिहाना आचार्यैः प्रामाण्यमूर्द्धन्यतास्थापनेन निराकृताः॥ ततो दक्षिणमथुरां प्राप्ताः। स्नात्वा स्थिताः। तत्र केचन वैष्णवाः समागतास्तेचाहुरत्र कश्चित्पाण्ड्यो भूपो विजयाख्य आसीत्तस्य पुरोधसः पुत्रो विष्णुस्वामी जातस्तेन वैदिको धर्मो भाग-

वतधर्मः प्रचारितः । पाषण्डिनो निराकृतास्तत्सम्प्रदाये बहवः समर्था आचार्या जातास्ते च शङ्करानन्दसमये योगिभिर्निहताः शस्त्रधारिणः प्रायशो मूढा बभूवुः ॥ तेषां सम्प्रदायोद्धर्ता विद्यानगरविजयी कश्चिदधुना जात इति श्रुतं तद्विदितमस्ति भवताम् ?। तदा दामोदरेणोक्तं त एव इमे, तदा तैरर्चनं कृतम । ततश्चलिता रामेश्वरं प्राप्तास्तत्र लक्ष्मणतीर्थे शिष्यैस्तीर्थश्राद्धमारब्धम् । तत्र वीरशैवा जहसुर्नेमे वैष्णवा न वा शैवाः क इमे पाषण्डिनः । तदा शम्भुना विवादे जाते परुषभाषणे च युद्धाय सन्नद्धास्तदा केतुकमण्डलुलकुटालोकिभ्यां भिन्दिपालैर्विद्राविताः॥ अथाऽऽचार्या रामेश्वरं दृष्ट्वा नत्वा तत्र लब्धेन गङ्गोदकेन वेदमन्त्रैः समर्चनमकारयन् । पारायणस्तवनं च चक्रुः। अथ धनुस्तीर्थे स्नात्वा दर्भशयनमनन्तशयनं चागतास्तत्र श्रीरवैष्णवान् वेदभ्रष्टान् विनिन्द्य चलितास्ताम्रपर्णी स्नात्वा पूजां कृत्वा पारायणं चक्रुः। तत्र पालङ्कोटेश्वरस्थपुरोधाः कालपुरुषदानं ग्रहीतुं गतःतदङ्गुलीसमुत्थितौ भीतो राज्ञा निष्कासितस्तत्रागतो रुरोद। तदाऽऽचार्यैस्तद्दयया एको ब्राह्मणो निरूपितः। स च गायत्र्युपदेशेन ज्वलदग्निसमः कृतः। स च तेन साकं कालपुरुषं गृहीतवान् । अथ राजा रोगमुक्तो जातस्ततो राजमहिला पुरोधसो वार्त्तां श्रुत्वा सपत्रिकरा सधवा आचार्यसमीपे समागता तान्प्रणम्य विज्ञाप्य पुरे नीत्वा राजविभूत्या पूजनं कृत्वा तेभ्यो धर्मान् शुश्राव। उपदेशं च जग्राह । ततः प्रचलिता आचार्याः श्रीवैकुण्ठं प्राप्ताः। तत्र शेषाचार्यो भवतां का भक्तिः कः सम्प्रदायः कानि मानानीत्याह । आचार्या निर्गुणा भक्तिः सङ्कर्षणशङ्करनारदव्यासविष्णुस्वामिदेवदर्शनादिसम्प्रदायः।वेदसूत्रगीताभागवतादि मानामित्याहुः ॥ अथ आलवालाचिन्नगर्यां गतास्तत्र जीर्णस्वामिना सत्कृत्य रामानुजमुनेश्चित्रा दर्शिता।

श्रीदामोदरलीलानुभवः आविरो निजसम्प्रदायपारम्पर्यञ्च, तत्र पृष्टं शारीरकव्याख्यानं कृत्वा गुरुभिश्चलितम्। अथ तातार्झैः समागतास्तत्राऽऽचार्यनयेन जीर्णस्वामिपुरुषैर्नीता नारायणदर्शनं तच्चरणाम्बुपानं कृत्वा स्थिताः। तत्रत्यजीर्णस्वामिना कृष्णदेवसभावृत्तान्तः पृष्टोऽन्तस्तद्धर्मसूत्रव्याख्या च। तन्निरूप्य विदिने समागता नीराशयमुत्पाद्य पारायणं चक्रुः। ततो दीर्घनारायणं समेतास्तत्रापि जीर्णस्वामिना तथा सत्कृताः पृष्टाश्च 'कथं तुलसीमाला निषिद्धकार्ये निषिद्धा सदा धार्यते' इति। आचार्यैः सविस्तरं तदुत्तरं निरूपितम्। ततः प्रचलिताः कुमारीं प्रत्यागताः कृष्णभगिनीं तां दानमानैः संतोष्य पद्मनाभं समागताः। तत्र देवं नत्वा स्तुत्वा वेदपारायणं चक्रुः। ततो राज्ञा महताऽऽदरेण निजप्रासादे नीताः संपूजिता निजभोगिन्या अनुपपत्तिब्रह्मरक्षसेन धर्षिताया दुःखं निवेदितम्। तदा दामोदरेण गुरुपादतीर्थे दत्ते तेन ब्रह्मराक्षसो विमुक्तो वैकुण्ठं यातो राजमहिला विरुजा जाता ॥ तत आचार्याः प्रचलिता जनार्दनं प्राप्तास्तत्रापि भगवतो दर्शनं पूजनं विधाय पारायणं चक्रुः। तत्र प्रेमाकरस्य शिष्याः प्रशिष्या विष्णुस्वामिरूढास्तथा विरक्ताः समागताः। गुरुपारम्पर्याऽवस्थितिकथा चाऽऽसीत् ॥ ततश्चलिता मलयाद्रिमारुह्यागस्त्याश्रमं दृष्ट्वा हिमगोपालमेत्य तं संपूज्य कौण्डिन्याश्रमं प्राप्ताः। तत्सरसि स्नातास्तं मुनिमपश्यन्। अथ तेन मुनिना पूर्ववृत्तं कथितम्। मद्गुरुः शाण्डिल्यस्तस्मै गोवर्द्धने मुनिकन्या ललिताऽऽख्या हरेः प्रियभक्तिरहस्य पञ्चाक्षरमनुं ददौ। स च मह्यम्। तदिदं भवते कथयामि। आचार्यास्तच्छ्रुत्वा पुष्पफलोपहारं समर्प्य पारायणं समाप्य चन्दनवनदर्शनायागताः। तत्र वृद्धाः सिद्धास्तपस्विनो दृष्ट्वाऽऽचार्यान् संपूज्य वैकुण्ठं गताः। ततो माहिषपुरीं प्राप्तास्तत्र राजपुरोधा आचार्यशिष्यो राज्ञे वृत्तं जगौ। राजा च मह-

ताऽऽदरेणाऽऽचार्यानानीय सिंहासने चोपवेश्य भागवतं राजधर्मं श्रुत्वा बहुद्रविणमुपढौकितं रत्नहारं चकार ॥ किञ्च आचार्याणां वानीरच्छत्र शुल्बदण्डचामरे तथाभूतशङ्खचक्रकेतुध्वजादीन् निरीक्ष्य सौवर्णसितातपवारणचामरादीन् प्रायच्छत्। तदा दमोदर आह। आचार्या वनवासिनो व्रतिनश्चान्नवस्त्रमात्रं प्रपन्नस्य स्वीकुर्वन्ति। इदं भगवते विप्रेभ्यो वा देयम्। तदा राजा सपरिकरः प्रपन्नोऽभूत्। हयैर्धं हारं दत्तवान् ॥ पुरोधा विद्यानगरे प्रपन्नोहमित्याह ॥ तत आचार्याश्चलिता महिलाकोटसंज्ञकं यादवाद्रिं समायाताः। यत्रत्यनृसिंहाचार्यस्य रामानन्द शिष्यो येन प्रभुविष्णुस्वामिवद्धर्मरक्षार्थं विरक्तवीरध्वजिन्यः प्रवर्तिताः। तत्र रामानुजमुनिना योगिनीपुरतोऽभ्यानीतं यवनराजसुतया वशीकृतं चपलरायाऽऽख्यगोपालं निरीक्ष्य प्रणम्य स्थिताः। तदा तत्र जीर्णस्वाम्याह। भवद्भिस्तप्तमुद्रा किं न धार्यते? आचार्याः यथा भवद्भिः स्रक्। सा मलमूत्रादौ निषिद्धा। इयमपि श्रौते स्मार्ते निषिद्धेति सविस्तरं निरूप्य चलिताः सुब्रह्मण्यं समागताः। तत्र ब्राह्मणा यथोक्ताचारा आचार्यान् समागतान् श्रुत्वा द्रष्टुं समागतास्ते तान् प्रणेमुः। गुरवोपि वृद्धान् ववन्दिरे। तेषां बृहस्पतिः प्राह। के यूयं विलक्षणवेषाः?। तद भट्टाचार्य आह। भारद्वाजगोत्रिणः काकराग्रहारवासिनः सोमयाजिनो लक्ष्मणार्यस्य सुता जितविद्यानगरसभाः श्रीवल्लभाचार्या अमी। स श्रुत्वाऽऽह। किं यल्लमायाः सूनुः? ओमित्युक्ते स प्राह। भवन्तो वैदिका बटुव्रता आगमोक्तं भागवतं धर्मं किमाचरन्ति। तदाऽऽचार्याः स्वीयधर्माचरणमनु भागवतधर्माचरणे को दोषः?। "केवलस्य कर्ममार्गस्य मण्डूकादौ निषेधः। गीतादौ भागवतधर्मस्य प्रशंसा"। एवमुक्ते ब्रह्मभट्टो विवादं चकार। आचार्यैः प्रत्युत्तरं दत्तम्। शम्भुशेषभट्टाद्यैस्तद्विस्तरो

निरूपितः। तदा ते ब्राह्मणाः प्रसन्ना आचार्यान् प्रणेमुः। अविद्धैकादशीव्रतविष्णुपूजनोर्ध्वपुण्ड्रादि वैष्णवधर्मं जगृहुः। केचिदाचार्यशिष्या बभूवुः। तत उडुपीकृष्णं समागताः। तत्र माध्वयतिराजेन सत्कृताः पुनः पृष्टाः, भवद्भिः सर्वं समीचीनं कृतम्। तथाऽपि भागवता दर्भशयने कथं धर्षिताः?। तदाऽऽचार्यैरुक्तम्। वर्णाश्रमद्वेषिणो भागवता न भवन्तीत्युक्त्वा, तान् प्रसाद्य चलिताः॥ गोकर्णे प्राप्तास्तत्र शिवधर्माद्याश्चतुर्विधाः शैवाः समागताः। तैः सम्यग् वामादि निजमतं प्रतिपादितम्। आचार्यैः खण्डितम्। तत्र राजपुरोधा एक आन्ध्रभट्टो नेतुं समागतः। तत्र पुरोधा आह। राज्ञा प्रणम्य विज्ञापितम्। मत्पुरे समागन्तव्यम्। सुब्रह्मण्यजयं श्रुत्वा सपरिकरोऽहं प्रेषितो हस्त्यश्वादयः पृष्ठत आयान्ति॥ तत आचार्याश्चलिता ऋष्यशृङ्गाश्रमं प्राप्ताश्चन्द्रमौलिदर्शनार्थं गताः। तत्रत्यशाङ्करनृसिंहाऽऽचार्यैः समादृताश्चन्द्रमौलिं निरीक्ष्य नत्वा स्थिताः। तत्र यतिराजः समागतो नमो नारयणायेत्युक्तो नारायणेत्याह। उपविश्य यतिराह। शुकस्वामिविष्णुस्वामिनोरद्वैताऽऽख्यसम्प्रदायः। तत्र विष्णुस्वामिसंप्रदाये भवानद्याऽऽचार्यो जातः। तपसा विद्यया पदेन वृद्धता भवति। सा भवत्यास्ति। तथापि वयमाश्रमतो वयसा वृद्धा भवता मान्याः। तेऽतः पृच्छामः। एकदेवपूजावादः सुब्रह्मण्ये स्थापितः। स कथं घटते? शास्त्रे पञ्चदेवपूजादर्शनात्। तदा गुरवः प्राहुः। ब्रह्मणः स्कन्दादेश्च शास्त्रे पूजा दृश्यते। सा कथं परित्यक्ता?। भिन्नधियां पञ्चदेवाः पूज्याः अन्यस्यैकदेव एव लाघवादिति व्याससूत्रात्। ततस्तैत्तिरीयब्रह्मविचारः पृष्टः। सोऽपि गुरुभिर्निरूपितः। ते प्रसन्ना जाताः। तच्छिष्याः शम्भुभट्टाद्यैर्विवदन्तः पराजिताः। ततश्चलिता विद्यानगरान्तिके समागताः। दूतैः संबोधितो राजा परिकरेण सहेत्य प्रणनाम। प्राह च। अद्यसुव-

र्णसूर्योदयो जातः। श्रीमतां दर्शनं जातम्। तत्र कारणम्। मम जीवनकृते सिंहासनसेवा पादुकार्चनं गुरुभिर्दत्तम्। तत्फलमिदं फलितम। एवं विज्ञाप्य निजालये व्यनयत्तत्र पूजनादि कृत्वा तीर्थं पपौ तीर्थवृत्तं श्रुत्वा धर्मं शुश्राव। तं प्रमाद्य चलिताः श्रीपाण्डुरङ्गस्थलं समागताः। तत्र देवं नत्वा समर्च्याऽऽनीतभूषणादिकं समर्प्य पारायणं चक्रुः। तत्र निजसम्प्रदायिनो भागवताः समागताः। तत्र कोऽपि हरिनामप्रभावमनर्गलमाह। आचार्यास्तत्रापि नाम्नस्तारतम्यं बहुधोचुः। ततो नास्मिकं प्रातास्तत्रत्यैर्विप्रैः सादरं समेत्य निगमागमयोः परीक्षा कृता। ब्राह्मणैः शिव एव आराध्यो भस्मादि धार्यमित्युक्तम्। तत्राऽऽचार्यैर्नायं नियमः। श्रेयस्कामस्य विष्णोरुपासनस्य तुलसीमालादेर्धारणस्य विहितत्वादित्युक्त। ततश्चलितम्। रेवादाक्षिणतो दारुवनान्तरे, रेवोत्तरतो माहिष्मत्यन्तं परिक्रमं चक्रुः। तत्र मृगवने मृगशावः शरणमागतः। तमनु व्याधोऽपि। तेन क्षुत्पीडितेन मया पापं जानताप्ययं मृगः साधित इत्युक्तम्। कृष्णः कस्त्वं, कथं धर्मज्ञः, हिंसा कथं धर्म इत्याह। स च राजपुत्रोऽहं वेश्यादिदुष्कर्मणा परिभ्रष्टो व्याधसंगतो व्याधो जातः। श्रीमच्चरणदर्शनाद्विमलधीरहं कुटुम्बभरणानु वः शरणं कामये। आचार्याश्चिन्तां त्यज। सुवर्णविटकमेनं निलये निधाय, द्वारकेशं दृष्ट्वा, राज्यं लब्ध्वा नारायणं भजेत्याहुः॥ स तदद्भुतं श्रुत्वा मृगं नीत्वा गृहे सौधं दृष्ट्वा पूजितं मृगं निधाय, भोगाद्विरक्तो गुरुनिगादितं चक्रे। ततो दारुवनेऽर्जुनद्रुमा गुरूणामग्रतो निपतिताः। तत्रत्यजनाः किमिदं जातमित्यूचुः। आचार्याः पश्यत गगनमित्यूचुः। तेऽम्बरे शिवविष्णुदूतानां कलहमपश्यन्। विष्णुदूताः एते राजपुत्रा दशमीविद्धव्रतदोषतस्तरुत्वं प्राप्ता वैष्णवाचार्यचरणपांस्वादिगन्धेन निर्मुक्तबन्धना

कृत्स्नास्त्रियोऽपि वैकुण्ठं नेया इत्युक्त्वा तथा चक्रुः । तद्दृष्ट्वा जना वीक्ष्य विस्मिताः प्रणेमुः ॥ ततो भृगुकच्छे ब्राह्मणाः सन्दिग्धाः । गुरुकाः वैष्णवा वयमपि संप्रदायिनः किं पुन केवला इति । तदा आचार्यैः संप्रदायाग्रहात् विष्णुभक्त्या च वयमेव स्थेयमुक्तम् ॥ अथ साहि-जन्याश्चलिता विशालामागताः । तत्र विद्वांसो ब्राह्मणा विवादे परा-जिता गताः, तदा धूर्तैरन्यैः शतसङ्ख्याकैः मिलित्य प्रश्नशतकं कृतम् आचार्यैरालपनशतं विधाय शतप्रश्नोत्तरं दत्तम् । तत्राऽऽचार्याणामद्भुत-चरित्रैस्सर्वं सर्वे प्रशशंसुः । तत्र केचित्खलाः प्राहुरयमैन्द्रजालिको यदात्र घटसरस्वती भवेत्तदा पराजितो भवेदित्यूचुः । तदा कृष्णः कोऽसौ कुत्रास्ति योगी? वेत्रवतीं गत इत्युक्ते ततश्चलिताः चैद्यस्थानं प्राप्ताः । तत्रत्यभूपेन सत्कृताः जयाऽजयप्रसङ्गे राजाऽऽह । घटसरस्वती वेत्रवत्यां रामचन्द्रसभां जेतुं गतः । स महानुद्धतः श्रीमद्भिर्जेतव्यो मम वीराः पथि रक्षका नेतव्या राजयुद्धे भयमस्ति । ततश्चलिता वेत्र-वतीं प्राप्य स्नात्वा पारायणं चक्रुः । रामचन्द्रभूपेनाचार्यागमनं श्रुत्वा शिबिरादेत्याचार्याः कलशमन्दिरे नीताः । सिंहासने समुपवेश्य पूजिताः । घटसरस्वतीयोगिनो योगसिद्धयः कथिताः । यवनेशसुताया नौकायाः कर्षणादिकं च ॥ अथ कृष्णोक्त्या समाहूतः स चेत्याह । कि-मुच्चासनस्थित्या विद्यावैभवमन्तरा । तच्छिष्यो जगत्सत्यमङ्गीकरोषी-त्याह । शम्भुस्तथा स्वीकारोमीत्यूचे, अथ तेन वन्हौ पटे न्यस्ते दग्धे क्व सत्यः पटो वदेत्युक्तम् । शम्भुराचार्यदत्तादिव्येक्षणात् सभासद आह । वन्हौ यतिमुकुटेश्वरे सर्वत्र ब्रह्मात्मतया पटः स्थितः । प्रादर्श-यत् ॥ सर्वैः सर्वत्र पटः सत्योऽस्त्युक्ते योग्याह । इन्द्रजालः कृतः । वह्निशक्तिनिरोधो वा । पुनर्वह्निर्ज्वालिनो मन्त्रश्च नियुक्तः । तत्र तृण-मपि न दग्धम् । यदा तदा पुनर्विवादाय प्रवृत्तस्तत्र पराजितो धृतः

संपूज्य सरस्वतीमाह । जगत्सत्यमसत्यं वेति ? सत्यं वद, तदा सरस्वती जगत्सत्यमित्याह । तदा गृहे घटं नीत्वा तदग्रे मर्त्तुमुद्यतः । सा चाह वाक्यतेरग्रे कथं मिथ्या वक्तव्यमिति । ततो राजा प्रपन्नो ऽभूज्जयजयध्वन्याऽऽचार्यैस्ततः प्रस्थितम् ।

॥ इति दक्षिणयात्रा ॥

अथ दन्तवक्रादिविषयेषु तत्तन्नृपैः पूजिता धवलगिरिं प्राप्ताः । तत्र महीपः समागतो हेमशतकमुपढौकितं चक्रे । दामोदरेण कथितं शिष्यमन्तराऽन्यस्य धनमाचार्यैः न गृह्यते । तदा राजा क्रुद्धो निजविदः समाहूय शास्त्रार्थं कारितवान् । तान् जित्वा चलिताः । अथ मथुरां समागताः । तत्र चतुर्वेदभुजगराज्ञया विश्रान्ते सस्नुः । पारायणं च चक्रुः । ततो गोकुलं गतास्तत्र श्रावणशुक्लैकादश्यां व्रतं जागरणं च कृतम् । तत्र महानिशि भगवता दर्शनं दत्तम् । तदाऽऽचार्यैः सिता पवित्रसूत्रयोरर्पणं कृतम् ॥ ततः श्रीगोकुलनाथेन त्वया दैवोध्दृतये चिन्ता विधीयते, तां माकुरु, मदुक्ते भावनासहितं गद्यं गृहाण, तन्मदुक्तरीत्या देयम्, तेन ते निर्मुक्ताहन्ताममता मदीयाः सन्तः संसारं हित्वा मल्लीलां प्राप्स्यन्तीत्युक्त्वा रोहितम् । आचार्यैः प्रभाते दामोदराय कृष्णदासाय च तद्गद्यं दत्तम् । गोविन्दघट्टे पारायणं कृत्वा चलिता व्रजयात्रां चक्रुः । तत्र वृन्दावने ब्रह्मसरसि श्रीबिल्वमङ्गलाश्रमे नरहरियतिः श्रीमदाचार्यान् समीक्ष्य तेभ्यो निजवृत्तं कथयित्वा प्रायश्चित्तं विधाय त्रिदण्डग्रहणात्मकं यथाविधि पुनः संन्यासं चक्रे । व्रजात् प्रचलिताः पुष्करमागताः । तत्र ब्रह्मसरसः पश्चिमतटे स्थितास्तत्क्षेत्रयात्रां संहितयोः पारायणं च चक्रुः । तत्र कमलैरर्चनं हरेःकुर्वन् । तत्र महानानन्द आसीत् । तत्र समागतैर्नीलिनाक्षमालैर्वटपत्रति-

लकैर्वेदपरैर्ब्रह्मदत्तादिभिर्विधिः पूज्यो निर्गुणश्चायमित्युक्ते " स तथाविधोऽपि सांप्रतं सत्त्वप्रकृतेर्विष्णोरंशभूतराजस एव ब्राह्मणरूपेण पूज्यत इति ''आचार्यैः संस्थापिते तेषां शरणमागत' । ततः प्रचालिता अम्बिकावनं प्राप्तास्तत्र कश्चिच्छिवयोगी सैनेत्याह ! सच्चिदानन्दरसा शक्तिर्भोगमोक्षदात्री साऽऽगमाध्वनाऽर्चिता आशु प्रसीदतीति । गुरुद्रष्टः शम्भुर्विप्रैर्निगमाध्वनैवाऽर्च्यो मुक्तिदानाधिकारो हरेरेवअत्र विवदे साशिष्यः पराजितः स शरणमागतः ॥

॥ इति मध्यनयात्रा ॥

ततः सिद्धपुरमासाद्य पारायणं चक्रु । तत्रोदीच्यविप्राः शालिग्रामा-द्यर्चनाद्ब्राह्मणार्चनं वरमित्यूचुः । तत्राचार्यैर्मूर्तिपूजावादे स्थापिते ते शिष्या बभूवुः। ततः प्रचलिता वटेश्वरं समागताः । तत्राचार्यपूजान्ते निशि कथा जाता। तत्राचार्यैरुक्तम् । प्रातरर्हत्पत्तने गन्तव्यम् । भवद्भिः सावधानैर्भवितव्यमिति । ततः आलोकिः, कमण्डलुः, कृष्णो दामोदरः, शङ्करानन्दश्यामानन्दौ, गोविन्दः, विष्णुः, नृहरिः, वेणुः, शम्भुः, दक्षिणतः समागतसैन्यं च यथोचितमाहुः । नाऽस्माकं भयं युष्मच्चरणशरणानामिति । ततः प्रभाते स्वर्णदण्डगोमुखं छत्रं पुस्तकं चामरे पादुके पूजाकरण्डं मायूरचामरे एते यथाक्रमशो दधुः ॥ ततोऽर्हत्पत्तने गद्यपद्यं पठन्तः शङ्खादिनादं कुर्वन्तो विक्रमं दर्शयन्तः प्रविष्टाः । प्रजाभिः सकौतुकं दृष्टा जैनैः सेर्ष्यं जिनाङ्गनाभिः साश्चर्यं तत्पुरमतिक्रम्य सरःसमीपेऽवतीर्णाः । तत्र चतुर्थे यामे जैना मतं बोद्धुं समागतास्तृणासने निवेशिताः प्राहुः । भवन्मते दया धर्मो न वा? । धर्मः कः? प्रमाणं किम् अधिकारी क इति । तत्राचार्यनिर्देशात् शम्भुर्हरिभट्टारको धर्मशर्मो-

प्राप्तास्तत्राऽऽह्निकं पारायणं च चक्रुः। तत्र जाम्बवाद्विप्रा विष्णुस्वामिमतगाः शिष्याः कृताः। तेभ्यः सिद्धान्तादि बोधितम्। ततः कपिलक्षेत्रमागताः। तत्र वेदपारायणं भारतपूर्त्तिं च श्रुत्वा कापिला विप्राः समागतास्ते निरीश्वरसाङ्ख्यं प्रोचुः। गुरवस्तं युक्त्या समखण्डयन्। तेषां वैश्वानरं रूपं दृष्ट्वा भीताः शरणमागताः। ततो बहुचरां याताः। तत्र वामाः प्राप्ताः सुरामांसादिभक्षणप्रशंसामकुर्वन्। ततः शम्भुभट्टेन ते सर्वे निर्जिताः। ततस्ते हन्तुमुद्यता लकुटाल्लोकिना निहताः पितृवनं गत्वाऽभिचारं चक्रुः। ततो रात्रौ दावानलो दृषद्वृष्टिर्भूतात्थानमभूत। ततो गुरोराज्ञया शङ्खनादे कृते तत्सर्वं तिरोहितमभूत्॥ ततः सिद्धाचलं समागतास्तत्र राजदेवभूत्या जनमेलापकं प्रेक्ष्य ततो बहिर्जलाशये समुत्तीर्णाः। आचार्यान् पण्डितान् श्रुत्वा जिनपण्डिताः समागताः। शिबिराद्बहिः स्थिता आचार्योक्त्या शम्भुना पृष्टाः। पाण्डित्यं द्रष्टुमागताः। यदि यूयं पण्डितास्तर्हि अस्मन्मतं कथयत। आचार्यैः सर्वं तन्मतं निरूप्य खण्डितम्। ते पाण्डित्यं प्रशंसन्तो गताः॥ ततः प्रभासमायाताः। ततः शम्भुप्रेरितः कश्चित् शम्भुभक्त आचार्यदीक्षां जग्राह। अथ सोमनाथालये देवं दृष्ट्वा नत्वा स्तुत्वा यात्रां वेदपारायणं च व्यधुः। तत्र ऋषिः शम्भुर्विज्ञः कश्चिच्छिव एव विप्रैराराध्य इत्याह। सोप्याचार्यैर्जितस्ततः परे म्लानमुखा जग्मुः। ततो रैवताद्रिमायाताः। तत्र दामोदरकुण्डे दामोदरमूर्त्तिं लब्ध्वा स्थिताः। तत्र भारतमोक्षधर्मकथायां द्रौणिः समागतः कृष्णेन दृष्टः पृष्टश्च॥ ततो रैवतोपरि गतास्तत्र गोरक्ष्यशिखराधो गोरक्ष्यशिष्याः प्रोचुः। यदि यूयं सिद्धास्तर्हि वदत गोरक्ष्यः कुत्र? तदा कृष्णः प्राह सर्वत्रासौ। तेभ्यो गोरक्ष्यकोटीस्ते प्रदर्श्य चलिताः॥ ततो मूलगोमतीं प्राप्तास्तत्र कश्चित्रिद-

ण्डी दाक्षिणात्यो विप्रः पातञ्जलयोगवित् आचार्यकथायां कृष्णदासेन दृष्टः पृष्टश्च ॥ कथान्ते स आह । विष्णुस्वामिबिल्वमङ्गलशिष्योहं चतुर्वारं योगेन मृत्युं निवार्य हरिलीलादर्शनाऽर्थं आचार्यदर्शनार्थं चेह स्थितोऽस्मि । आचार्यैस्तस्मै भागवतं श्रावितं लीलाश्च दर्शिताः॥ ततो द्वारकां गताः तत्र गोमतीतीरे शम्याअध आसिका कृता स्नानादिच। गोविन्दब्रह्मचार्याद्यैरादरेण नीता हरेर्निलये गताः । तत्र देवं प्रणम्य स्तुत्वा समानीतं हारादिकं निवेद्य समर्चनं चक्रुः ॥ ततो द्वारकेश आचार्यानाह । ‘ भवता स्वीकृता मया स्वीकार्याः समर्पितात्मानो यथा गिरिधरेण ’ इत्याद्युक्त्वा स्रग्वीटिके दत्ते ॥ ततस्ते निजासिकामेत्य पारायणं चक्रुः । तत्र शारदामठतो दण्डिनः समागताः श्रीभागवतप्रामाण्ये विवादं चक्रुः । पराजिताः प्रशंसन्तो गताः। ततोगुरुभिर्यात्राकृता ॥ अथाचार्यकथायां साचीहरो विप्रार्भको गमाऽभिधः समेत्य स्थितः । आचार्यैः पृष्टः कस्त्वं ? तदा स आह । सच्चिदानन्दरूपोहं देहाद्यतिरिक्तोहमीश्वरपालितो लालितोहमिति । तदाचार्यैः प्रसन्नैः कुतस्ते ज्ञानमिदम् ? सचाहेश्वरेच्छया। ततो व्यवहारेण वदेति गुरुभिरुक्ते निजवृत्तमुक्त्वा शरणमागतः। ‘तत आचार्यास्तेन साकं शङ्खोद्धारादियात्रां कृत्वा नारायणसरसि प्राप्ताः । तत्र कश्चित् सिंधुनृपतेरमात्यो रुग्णं निजसुतं नारायणं गुरुसमीपे समानयत् । बहुतराऽर्थनया तस्मिन् विरुग्णे कृते निजगृहसनाथनाय स याच्ञां कृतवान्।ततस्तद्याच्ञया तत्पुरं समादृता गताः। मार्गे मिलितविरक्तसैन्येन महाराजभूत्या प्रविष्टा म्लेच्छान् विस्मापयन्तस्तत्सदनमुपेत्य तदीयकुटुम्बमन्याँश्च प्रपन्नान् शिष्यान् कृत्वार्पितद्रव्यं गृहीत्वा दत्त्वा च तत्कारितराजरक्षाममात्यं च पुरस्कृत्य सिन्धुवररोधसा प्रस्थिताः। यवनमहत्पदसमीपे समागताः। तदा तद्दरानिनादं श्रुत्वा क्रुद्धैः सन्नद्धैः शा-

स्वपाणिभिः शकैर्निरोद्धुं पथि समागतैस्तत्राचार्यपुरुषा वराह-सिंहादिभीषणरूपा दृष्टाः ॥ ततस्ते भीताः परावृत्ता अमात्यतस्त-त्स्वरूपमवबुध्य निजगुरवे ह्यभणन् ॥ गुरुः श्रुत्वाऽऽह । यदि वेदवि-द्यायां पण्डिता दिग्जयिनो वल्लभाचार्याऽऽरव्यास्तर्हि मयैव मागधबौ-द्धेन सह धर्मनिर्णयाय तत्र गन्तव्यम्। शान्तैर्युष्माभिरागन्तव्यम् । तथा-चार्याणां शिबिरसमीपे यवनो बौद्धेन सह समागतः। बहिः स्थिताया-ऽमात्याय प्राह । धर्मनिर्णयार्थमागतः । स तमवस्थाप्य सावकाशे गुरून् विज्ञाप्य शिबिरान्तिकमुपागमत ।ताभ्यां हिंसाहिंसयोर्धर्मनिर्णये पृष्टे आचार्या मध्यस्थं विप्रं कृत्वा तं प्रत्याहुः । धर्मशास्त्रोक्त्योभयत्र भवति। तद्विरोधेऽधर्मश्च । एतन्निर्णयार्थममुष्मिन् वृक्षे काककपोतौ प्रष्टव्यौ तौ वदिष्यतः। ततो मध्यस्थो विप्रो यवनबौद्धाभ्यां तच्छिष्यैः सह तत्र गतः काकं प्रत्याह। गुरोराज्ञया मनुष्यवाचा त्वमीप्सितार्थं वद। ततः काकः पारसीकदेशे हिंसाविहारः सामन्तः शकोऽहमभवम्। मया ऽऽखेट क्षतेन गुरुः पृष्टः स चाह। अविधिना निहतः पशुः पापाय तेन दुःखं जातम्। ततो मया तदुक्तविधिना बहवः पशवो हता मृतो नरकं-गतः। ततोऽभ्येत्याऽह्यादियोनींर्भुक्त्वा हिंसकः काकोहमभवम् । अतो-विधिनाऽविधिना कृता हिंसा दुःखायैवेत्याह॥ ततस्तथोक्तः कपोतोऽपि गुर्ज्जरदेशे क्षत्रियोहमभवम् ॥ तेन मया बहवो यज्ञाः कारितास्तेषु निर्दयं पशुघातं समीक्ष्य ग्लानिर्जाता ॥ ततो जिनधर्मो मया स्वीकृतः । तस्मिन् तिष्ठता आरम्भे दया भाव इति विज्ञाय ते परित्यक्ताः स्नानदानादेः का वार्त्ता? एकदा कण्टकविद्धो गोष्ठान्ते स्थितः। रात्रौ गोष्ठदाहे समु-त्पन्ने दह्यमानाः पशवो जनाश्च क्रन्दन्तो मामाहुः। बाह्यशृङ्खलां मोचय मया रात्रिसर्पणादिपापभीतेन सा न मोचिता। प्रातर्महीभृता तद्वृत्तं ज्ञातं निगडेनाऽहं बद्धः। ततो मृतः सांप्रतं कपोतो जातोऽतः शास्त्रानु-

क्ताऽहिंसाऽपि न धर्मायेत्याह। ततस्तौ यवनबौद्धौ निजधर्मं वेदविरुद्धं परित्यज्य गुरूणां शरणमागतौ। गुरुभिस्तेन विप्रेण च भगवद्भजनं कर्तव्यमित्युक्तौ। ततो गुरून् प्रणम्य निजान् विसृज्य चलितौ। यवनो द्वारकां प्राप्तो गोब्राह्मणातिथिशुश्रूषकस्त्यक्तहिंसो भूत्वा विष्णुभक्त आर्यखानेति प्रसिद्धो बभूव॥ बौद्धस्तु यात्रिकान् गौरश्रीपार्श्वनाथयात्राकृते विसृज्य स्वयं नारायणसरः प्राप्तो महत्सेवया विशुद्धो भक्तो जातः। तत आचार्याः प्रचलिता रहूगणपुरं नृसिंहोद्भवं प्रल्हादाद्रिं पञ्चनदीदृष्ट्वास्नात्वा तत्रत्यान् वैष्णवान् कृत्वा गेवासर आयाताः। तत्र विरक्तसैन्येन गिरिनाहूय स्नाता जयजयध्वनौ जाते ब्राह्मणा भोजिताः

॥ इति पाश्चिमयात्रा ॥

ततः प्रचलिता यमुनोद्भवं स्नात्वा कुरुक्षेत्रे समागताः। तद्यात्रां कृत्वा शाकटिकं महाबलं विप्रं वासुदेवं पण्डितं जगदानन्दं तथा भागवतपण्डितं रामानन्दं च शिष्यान् कृत्वा हरिद्वारं गताः। ततस्तपोवनं हृषीकेशं गत्वा गङ्गामुल्लङ्घ्य त्रिहरिं प्राप्ताः। तत्रत्यभूपेन सत्कृतो गङ्गावतरणं गत्वा तत्र भगीरथशिलां दृष्ट्वा तत्रान्यानवस्थाप्य कृष्णदासेन सह गङ्गोद्भवं समीक्ष्य ततः प्रत्याव्रज्य लक्ष्मणान्दोलमागताः। ततो व्यासगङ्गादिमार्गेण चलिता रुद्रप्रयागमागताः। तत्र बिल्वमङ्गलदर्शनं जातम्। तदाज्ञां लब्ध्वा गुप्तकाश्यां भागवतपदे पुस्तकच्चयमत्र स्थिता दृष्ट्वा चलिताः केदारं समागताः। तत्रत्यान् देवान् समीक्ष्य ऊखामठजोषीमठयोर्याथावरान् विद्यया पराभाव्य नारायणपदं प्राप्ताः। तत्र बदरिकानाथं व्यासं स्तुत्वा नारदोद्धवाभ्यां संमन्त्र्य व्यासाश्रमं गत्वा तस्मै 'वामबाहुरिति' पद्यं श्रावयित्वाऽऽशिषं लब्ध्वा ततः परावृत्त्य शोणशृङ्गनन्दप्रयागकर्णप्रयागाध्वना चाकचिक्यघट्टमवतीर्य शम्भल-

ग्रामे प्राप्ताः। तत्र कल्किस्थानं दृष्ट्वा कान्यकुब्जं समेत्य गङ्गातटे स्थिताः। तत्र दामोदरदासदत्तताम्रपत्रस्थलीलासम्बन्ध्यर्थं निरूप्य तदभिज्ञं तं तत्करपल्लवस्थं चित्रं प्रदर्श्य तं सकुटुम्बं च शिष्यं कृत्वा तत्कृते श्रीद्वारकेश्वरं प्रातिष्ठाप्य चलिता ब्रह्मावर्त्तान्नैमिषं प्राप्ताः। तत्र ऋषिभ्यो 'नैष्कर्म्यमप्यच्युतभाववर्जित'मित्यस्य व्याख्यानं यामत्रयावधि श्रावितम्। ततश्चलिता अयोध्यां गताः। तत्र रामायणं समाप्य हनूमन्तं विस्माप्य प्रयागमागताः। तत्र वेदपारायणं कृतम्। तत्र पितृव्यभ्रातृव्यौ विवादार्थमागतौ सम्बोधितौ। भ्रातृव्यो गदाख्यः शिष्यः कृतः। तत श्चलिता विन्ध्याद्रिमागताः॥

इत्युत्तरयात्रा.

ततः काशीं प्राप्ताः। तत्र यात्रायां पञ्चमेऽह्नि शिवगयां प्राप्ताः। तत्र निशि कथाऽन्ते कश्चिद्भूपः प्राह। मयाऽष्टवारमियं शिवगया कृता तथापि मे भ्राता प्रेतो मदङ्गनां न मुञ्चति। अथ कृष्णदास आह। प्रेतः कदैष्यति? भूपो मुहूर्त्तानन्तरम्। कृष्णो महिलामानय। भूपेनानीता महिला॥ तत प्रेतः समागतः सा पाहिपाहीत्याह। कृष्ण प्रेत! किमिच्छसि दूरं गच्छ। प्रेतोऽहमस्य ज्येष्ठो भ्राता, मयात्र शम्भली-संगमः कृतः। तस्यां मे तनयो जात। तस्मै मया राज्यं दापितम्। बलादयं न दत्तवान्। मृतोऽहं प्रेततां प्राप्तः। पूर्वद्रोहेण मयाऽस्य तनया नाशिताः पत्नीं च नाशयिष्यामि इत्याह। ततः कृष्णेन गुरुचरणोदकं प्रेतोपरि क्षिप्तम्। तदङ्गसङ्गात प्रेतस्तं देहं परित्यज्य दिव्यकायो भ्रात्रेऽभयं दत्त्वा गुरून्नत्वा नाकं गतः। तत आचार्याः काशीयात्रां समाप्य मणिकर्णिकायामेकदा स्थिता। तदा श्रेष्ठिकृष्णदाससुतः पुरुषोत्तमदासः समागतः। स च प्रणम्याह। सुचिरं मया तप्यते श्रीमद्दर्श-

नार्थम् । इदानीं म'मनुगृह्य गृहे समागत्य अनुग्रहो विधीयताम । तत आचार्यैः स्नानं कारयित्वा तस्मै मनुद्वयं माला च दत्ता ततस्तद्गृहे गत्वा मदनमोहनमूर्तिः संस्कृत्य सेवार्थं दत्ता । मार्गमर्यादा शिक्षिता। तदीयाश्चोपदिष्टाः । ततः प्रस्थिता गोमतीसङ्गमे गताः । तत्र कौचित्प्रीतिसम्बद्धौ श्यामशुक्लौ नृत्यगानपरौ स्त्रीपुरुषौ स्वीयै राजभृत्यैश्चानुगतौ गुरुशिबिरमेत्योचतुः । आवां शरणार्थिनौ रक्ष्यौ । आचार्यैः कृपया रूपविपर्यासे कृते ग्रहीतारस्ते समागताः । कृष्णेन दर्शितौ । तयो रूपविपर्यासं वीक्ष्य ते निवृत्य गताः । अथ तौ गुरवः शिष्यौ कृत्वा वृन्दावनं संप्रेष्य ततश्चलिताः शोणनदमिताः । ततो हरिहरक्षेत्रे सारस्वतभगवान्दासं समनुगृह्य गयायां विष्णुपादं संपूज्य प्रेतान् समुद्धृत्य वैद्यनाथं नत्वा गङ्गासागरं गताः । तत्र श्रीभागवतपारायणं श्रीकपिलदर्शनं स्तवनं च कृत्वा प्रचलिता वैतरणीं प्राप्ताः । तत्र पुरोहिताः प्राप्ताः । ते प्रोचुः कृष्णात्र देया । शम्भुः प्राह । लभ्यते कृष्णाऽत्र? तैरेकाऽऽनीता । शम्भुर्बहुम्य एका कथं दीयेत? । तच्छ्रुत्वा ते विमनस्का आसन् । ततो गुरुभिस्तत्रत्याः सर्वा गावः कृष्णाः कृत्वा तेभ्यो दत्ताः । तदा विप्रास्तदाश्चर्यं वीक्ष्य गा गृहीत्वा शरणमागता भगवन्तं प्राप्ताः । दत्ता गाश्चान्येभ्यो दत्ताः । ततश्चलिता विजयां भुवनेशं च दृष्ट्वा जगन्नाथमागताः । प्रणतास्तावत्सेवकेन प्रसादाऽन्नं हस्ते दत्तम् । तदाऽऽचार्यैर्विचारितं वैष्णवेन सर्वथैकादशीव्रतं कर्तव्यम् । श्रीजगन्नाथनिवेदितं च सद्यो भक्षणीयम् । अथो मादृशेनाचार्येण व्रतद्वयमपि संरक्ष्यम् । इति विचार्य नैवेद्यस्तुतिः समारब्धा । प्रभाते तत्प्राश्याह्निकं कृतम् । ततो राजा विद्वद्विवादानिर्णयाऽर्थं आचार्यान्सदो नीतवान् । तत्र प्रश्नचतुष्टयमासीत् । किं शास्त्रं? को देवः? को मन्त्रः? किं कर्मेति । तत्र विद्वांसोऽन्योन्यं विवदमाना आचार्यैः पराजिताः । ततो विद्याधीनौ जयाजयाविति पण्डितैरुक्तम् ।

निर्णयो न जात इति श्रीजगदीशाग्रे पत्रिका न्यस्ता धृता । तदा भगवता श्लोको लिखितः । तद्यथा—

पद्यम्—एकं शास्त्रं देवकीपुत्रगीतमेको देवो देवकीपुत्र एव ॥
मन्त्रोऽप्येकस्तस्य नामानि यानि कर्माप्येकं तस्य देवस्य सेवेति

तदा सर्वैरङ्गीकृतम् । आचार्योक्तो निर्णयः सत्यः । तदा कश्चिद्धावकः पण्डित आह । धौर्त्यमत्रास्ति जगदीशस्य हस्ताभावात्कथं पत्रिका लिखितेति । तत्र पुनस्तत्संमत्या पत्रिका न्यस्ता । तदा भगवता पुनः श्लोको लिखितः ॥

पद्यम्—यः पुमान् पितरं द्वेष्टि तं विद्यादन्यरेतसम् ॥
यः पुमानीश्वरं द्वेष्टि तं विद्यादन्त्यरेतसम् ॥ १ ॥

ततः स लोकैर्धिक्कृतः । तन्माता च पृष्टा । तया रजकवीर्यजोयमित्युक्तम् । तदा देशाद्राज्ञा निःसारितः । विद्वद्भिश्चाऽऽचार्याणां महोत्सवेन पूजनं कृतम् । तत आचार्या नरहरिद्विजं समनुगृह्य प्रस्थिताः । मार्गे रामदासमनुगृह्य ततः प्रस्थिता मन्दारमधुसूदनं प्राप्ताः । तत्र भगवतः पूजनं विधाय स्थिताः पारायणं चक्रुः । तत्र सिंहभीतया मात्रा परित्यक्तो मृगशावो मृगाकृत्याऽऽचार्यैर्विश्वास्य गृहीतो निजाङ्गुष्ठं पाययित्वा जीवितः । तस्मै वत्स्वर्ण पूर्वा स्मृतिर्दत्ता । परेभ्योऽभयाय सिंहत्वं दत्तम् । ततः पारायणं समाप्य चलिताः । देशान् पुनन्त आचार्यान् पश्यन्तो महेन्द्रं प्राप्ताः । तत्राचार्या रामं दृष्ट्वा प्रणेमुः । रामस्तानाह । विष्णोरवतारेण मया दुष्टक्षत्रमुत्साद्य वैदिकोधर्मः स्थापितः । एवं भगवदवतारेण भवता सद्धर्मः स्थापितः । इह मच्चतुष्टये पूर्वतीर्थेषु बहुषु श्रीभागवतपारायणानि कृतानि तथा कुरु । तदाचार्यास्तथेत्युक्त्वा पारा-

यणं चक्रुः ॥ तत्र निशि गान्धर्वं श्रुतम् । शिष्यैः किमिदमिति पृष्टे कश्चित्तत्रत्यो विप्र आह । नित्यं श्रूयते परं न ज्ञायते । तदाचार्यैरुक्तम् । अत्र कश्चिद्भागवतो वसति नित्यं भागवतोत्सवं करोति ॥ ततः कृष्णेन सह विप्रादयो गताः । तत्र मार्गे सिंहो दृष्टः । स परिक्रम्य गतः । वह्नि-रपसृतः । नदी गुल्फमात्राऽभूत । अश्वो हेषितमकरोत । हस्तिना गर्जितम् । सुरभिः पयोऽस्रवत । सुन्दरी चाग्रतोऽभवत् । ततः कन्या तान्नेतुं समागता । अथाऽग्रे विचित्रद्रुमलताकीर्णं भागवतपदं दृष्टम् । तत्राऽन्यान् बहिः सं-स्थाप्य कृष्णादयो विप्रेण सहान्तर्गताः । तत्र तुलसीसहस्राऽऽढ्यैर्दलैर्म-ञ्जरीभिस्तिलकमुद्रादिभिरलङ्कृता वैष्णवा दृष्टाः । तत्र श्रीगोपालो विचित्रशृङ्गारमण्डनमण्डितो वेणुवेत्राऽलङ्कृतः पुष्पमण्डपिकायां स्थितो दृष्टः । तदग्रे तेषां गुर्जरठो भागवतं पठन् दृष्टः । तेन स-त्कृत्य पृष्टाः । के यूयम्? तदा कृष्णेनोक्तम । वेदव्यासविष्णुस्वा-मिमतवर्तिश्रीवल्लभाचार्यशिष्या वयम् । ततः प्रमुदितस्तापस आह । विष्णुस्वामिशिष्यदेवदर्शनाचाऽऽर्यशिष्योहमाचार्यदर्शनार्थं तदाज्ञया योगबलेनागम्येह तिष्ठामीत्युक्त्वा समुत्थाय देवं शिरसि निधाय कृष्णमग्रतः कृत्वा शिष्यैः सह तापसश्चलितः । आचार्यान् दृष्ट्वा प्रणम्य वृत्तमुक्त्वा शिष्यैः सह वैकुण्ठं गतः । तत्र वृत्तमाचार्येभ्यो निवेद्य पृष्टम । केऽमी दृष्टाः ? । तदाऽऽचार्यैरुक्तम् । मृत्युः सिंहः । कालो व्यालः । संसारो दावानलः । नदी विषयालिः । अश्वो धराभोगः । नागो नाकभोगः । सुरभिस्तपोभोगः । विद्या प्रमदा । कन्या भक्तिरिति । तत आचार्याः पारायणं समाप्य चलिता गोदावरीं स्नात्वा नृसिंहक्षेत्रं परिक्रम्य निजाग्रहारं समागताः ।

॥ इति पूर्वयात्रा ॥

इत्थं पितृसंकल्पितप्रथमयात्रा सात्त्विकी नवभिर्वर्षैः पूर्णा कृता ।

अथ मात्रा पृष्टं तीर्थयात्रावृत्तमार्यैः 'वन्यैर्धान्यैः फलैः कन्दैः पुष्पादिभिरपि जीवनं विधाय यात्रा कृता, हिङ्गुलां प्रतिजिगामिषुर्लुण्ठकभये प्राप्ते बलेन रक्षितोऽहं ततो मया न गतम्। एवं पशुपतिं प्रति गन्तुमुक्तो चोरैर्बाधायां कृतायां लक्ष्मणेन त्रातः। अन्यत्र द्वारकेशेन विठ्ठलेशेन यमुनया चेत्याद्युक्तम्,। ततः किंचित्कालं तत्रोषित्वा तेषामनुज्ञया मातृकृते राजसदैवोध्दृतये द्वितीया यात्राऽऽरब्धा। पूर्वं मङ्गलप्रस्थं गताः। ततो व्यङ्कटेशं प्राप्य पूर्ववद्दक्षिणयात्रां विधाय विद्यानगरान्तवासे कायस्थनारायणदासमुपादिश्य सह नयन्तो भीमरथीं समेत्य श्रीविठ्ठलेशं सिषेविरे। ततो विठ्ठलेशैर्विवाहं कुर्वन्तु भवन्तः 'कन्या च काश्यां भवदर्थं संपादिता, तस्यामहं प्रादुर्भाविष्यामीत्याज्ञा कृता। तां कष्टेन स्वीकृत्य नत्वा प्रचलिताः। रेवादक्षिणरोधस्तीर्थानि स्पृशन्तो गुर्ज्जरं समुद्धरन्तः सुदामपुरोपवने कपूरसुदामबालमुपादिश्य सह निन्युः। ततो द्वारकायां विप्रं भगवान्दासं द्विवेदिराजमाधवौ शिष्यौ कृत्वा सिद्धपुरमागताः। तत्र पूर्वं भीमनाथे कौचित्स्वतः प्रभावौ दम्पती प्राप्तौ। तौ प्रणम्योचतुः। आवाभ्यां यावन्तः पुत्रलाभोपाया विहिताः। तथापि पुत्रो न जातः। इदानीमिह महारुद्राऽनुष्ठानं समाप्याऽऽचार्याणां प्रभावं श्रुत्वा शरणमागतावनुग्राह्यौ। तत आचार्यैर्बहुधा संबोध्य वरो दत्तो 'मासादर्वाक् पुत्रो भविष्यति,। गोपालपूजनाय पुत्रलब्धये एको विप्रो नियोजितः। ततश्चलिताः पूर्ववद्द्वारकायात्रां कृत्वा पुनश्चानयोः पुत्रे जाते जातवैराग्ययोरत्र प्रपत्तिः कारिता। संन्यासमर्थयतोस्तद्धर्मः श्रावितः। स्त्रीणां न्यासेऽनधिकारश्चोक्तः। अनुगमनं चोभयविधमनुज्ञातम्। ततस्तौ वृन्दावनं गतौ। भागवतसंन्यासेनोभौ सहैव मुक्तौ। बालाय मनुं दत्त्वा गोपालदासेति नाम कृत्वा गुरवः प्रस्थिताः। पुष्कराऽरण्यमार्गेण व्रजं समा-

गताः। तत्र तद्यात्रां विधाय एकाऽऽस्यां क्षत्रियामनुगृह्य कुरुक्षेत्रमार्गेण बदरिकाश्रमान्तं गत्वा तन्नाथं नत्वा व्यासाश्रमं गताः । तत्र शिला पतिता सा कृष्णदासेन गृहीता । तत्राऽऽचार्यैरतस्मै वरद्वयं दातुं प्रतिज्ञातम् । ततोऽन्तः प्रविश्य व्यासं श्रीबिल्वमङ्गलाऽऽज्ञया प्रमाणचतुष्टये संशयानपृच्छन् । स तान्निरूप्याह । भक्तिः प्रवर्त्तनीया, सिद्धान्तग्रन्था विधेयाः, प्रतिपक्षा निवार्याः, गार्हस्थ्यं विधेयमित्यादि । तथेत्युक्त्वा प्रणेमुः । ततः प्रचलिता हरिद्वारोपमार्गेण शूकरक्षेत्रं समागताः । तत्र कृष्णाय गुरुदर्शनाज्ञां दत्वा कान्यकुब्जाध्वना प्रयागं समागताः । तत्र महोदये चतुराम्नायस्थविरक्तैरादृताः स्नात्वा काशीं समागताः । तत्र दामोदरदासकृष्णदासशम्भुभट्टकेतुकमण्डलुलकुटालोकिवासुदेवादिशिष्यैर्वृतान् देवविभूत्या समर्चितान् वर्णिवेषान् निगमपारायणं कुर्वत आचार्यान् विलोक्य कन्यां दातुं देवंभट्टो भगवता श्रीविठ्ठलनाथेन प्रेरितः प्रार्थितवान् । आचार्या मातृपादा जानन्तीत्यूचुः । शम्भुर्भवच्चिन्तितं भविष्यतीत्याह । अथ काशीं प्रविश्य मातृसमाव्हयाऽर्थं शम्भुं तत्रावस्थाप्य श्रेष्ठिपुरुषोत्तमदासगृहे स्थित्वा जगन्नाथं प्रति चलिताः । तत्र गंगासागरे सायं प्राप्ताः । स्नानादि विधाय निशि स्थिताः । फलाहाराद्यलब्धौ तदा भगवानाह । क्षुधितोहम् । तदाचार्यैर्मनसि चिन्तितं क्षेत्रेभ्यो भर्जितव्रीहीन् क आनयेत् । कृष्णदासस्तद्विज्ञाय भर्जितव्रीहीन् कृत्वाऽऽचार्याग्रे निदधौ ॥ तदाचार्यैर्भगवते निवेद्य स्वयं भुक्त्वाऽन्येभ्यो दत्त्वा कृष्णाय वरत्रयं ब्रूहीत्युक्तम् । तदा कृष्ण आह । मुखरतादोषो गच्छतु, श्रद्धान्तः स्फुरतु, मद्गुरवे दर्शनं देयमिति । आचार्यैस्तथेत्युक्त्वा सुन्दरवनमार्गेण प्रस्थितम् । सुन्दरदासमनुगृह्य जगदीशदर्शनं कृत्वा ततः परावृत्ता माधवदासमुपदिश्य वाराणसीं प्राप्ताः ॥

॥ इत्येवं पञ्चभिः समाभिर्द्वितीययात्रा कृता ॥

अथ निजदेशात् स्वकुटुम्बे समागते, आन्ध्राणां मिथो विरोधे परिहृते, श्रेष्ठिपुरुषोत्तमदासेन विवाहोपयोगिपदार्थे संपादिते गणपस्थापनपुरस्सरो विवाह आरब्धः। तत्र समावर्त्तनेन ब्रह्मचर्यमपाकृत्य वृद्धगणेशस्थापितवरागमनोत्सवं विधाय पितृव्यो जनार्दनः भ्राता रामकृष्णः तौ उपाध्यायं विष्णुचितं, सुभद्रावरं रामेश्वरं, सरस्वतीवरं महेशं, मातुलं लक्ष्मीपतिं, शम्भुभट्टादीन् पुरस्कृत्य देवनभट्टगृहे कन्यायाचनार्थं गतौ । अथ तत्र देवंभट्टः कृष्णार्यः रामार्यः शङ्करः अच्युतः विष्णुभट्टः सदाशिवदीक्षितः एते निश्चयताम्बूलं कन्यादानं प्रतिजज्ञिरे। ततोऽपरदिने ग्रहमखो जातोऽथापरेऽह्नि वृध्युत्सवोजातः। तत्रवस्त्रालङ्कारदक्षिणादानमहाभोजनादि चोभयत्रासीत्। अथाग्रदिवसे आषाढशुक्लपञ्चम्यां विवाहो जातः तत्र गोत्रोच्चारः कृतः। वरपक्षे, आङ्गिरसबार्हस्पत्यभारद्वाजेतित्रिप्रवराय भारद्वाजगोत्राय दीक्षितगणपतिप्रपौत्राय दीक्षितवल्लभपौत्राय दीक्षितलक्ष्मणाऽऽचार्यपुत्राय तैत्तिरीयशाखाध्यायिने आपस्तम्बसूत्राय श्रीवल्लभाचार्यशर्म्मणेऽस्मै वराय, आत्रेयार्चनसावास्यत्रिप्रवरां दीक्षितश्रीकण्ठभट्टप्रपौत्रीं तथा दीक्षितगोविन्दभट्टपौत्रीं शाकल्यचरणाध्यायिन आश्वलायनसूत्रस्य त्रिप्रवरस्य आत्रेयगोत्रस्य देवम्भट्टस्य पुत्रिकां उक्तप्रवरगोत्रोत्थां महालक्ष्मीं वृणीमहे इति। एवं कन्यापक्षेऽपि वृणीध्वमिति कन्यायाः पिताऽऽह। ततो वरस्यातिथिपूजने देवंभट्टेन सुधया स्वकीयैरन्यैश्च पादप्रक्षालने कृते कन्यादाने च कृते यथाविधि विवाहो जातः। पितृव्येण जनार्दनेन वध्वै प्रथमं दीक्षा दत्ता। ततो विवाहं समाप्याऽऽचार्यैरौपासनं समारब्धं षण्मासं च तत्रैव स्थिताः। ततो निजकृते तात्तीयदैवजीवोद्धृतये तृतीया यात्रा-

ऽऽरब्धा । ततः काश्याः प्रचलिताः वैद्यनाथं तरुखण्डङ्कताः । तत्र रात्रौ भगवता श्रीगोवर्द्धननाथेन निश्याज्ञप्तम् । 'व्रजे भवद्भिः समागन्तव्यं मम सेवाप्रकारः संपादनीयः, । तत आचार्याः प्रबुध्य दामोदरदासकृष्णदासरामदासादिभ्यस्तां कथामुक्त्वा, व्रजमागच्छन्तो मार्गे पद्मनाभं नारायणं गिरौ कुम्भनदासमङ्गीकृत्य, श्रीनाथस्य सेवाप्रकारं संपाद्य रामं तत्र निवेश्य, पण्डितसाध्व्यादीन्संयोज्य च मिथिलाऽयोध्योपरि मार्गेण तत्र पुनः समेत्य, जगन्नाथमहेन्द्रादिमार्गतः श्रीविठ्ठलनाथान्तं गत्वा, ततो रेवोत्तररोधसा मध्यमार्गेण गुर्ज्जरदेशे बहून्देवान् समुध्दृत्य, श्रीद्वारकां गत्वा तत्र किंचित्कालमुषित्वा ततःपरं मीरापुरोहितं राममनुगृह्य, भोजकटादिमार्गेण लोहार्गलं प्राप्ताः । तत्रोषित्वा कुरुक्षेत्रं विहाय यमुनावतरणगङ्गावतरणकेदारमार्गेण बदरिकाश्रमं गताः । तत्र कृतैकादश्युपवासेभ्यो जन्मोत्सवानन्तरं मुन्यन्नेन तत्रस्थेन भगवता नारायणेन वामनद्वादश्यां पारणं कारितम् । ततो व्यासाश्रमं गताः । तत्र व्यासं नत्वाऽऽहुः । भवदाज्ञप्तं सर्वं संपादितम् । किंच श्रीभागवते बहुत्र पाठभेदो न्यूनाधिकपाठोऽनन्वितपाठोपि दृश्यते तत्र किं विधेयम्? । 'भवतीनां वियोगो मे' इत्यत्र 'आत्मत्वाद्भक्तवश्यत्वात्सत्यवाक्त्वात्स्वभावत इत्युत्तरार्द्धं विचारितं तत्कथं प्रमाणमित्याचार्यैरुक्ते व्यासस्तेषां पुस्तकं गृहीत्वाऽऽह । शुद्धं तिष्ठतु, अशुद्धं गच्छतु । ततः पुस्तकं प्रसार्य दर्शयामास । तत्रात्मत्वादित्यादि मिलितं पूतनालोकेत्यादि निर्गतम् । दृष्ट्वा मुदिता नत्वा चलिताः । हरिद्वारं समागताः । तत्र घोटकयोगिनो घोटकविधानेन गर्वमर्दनं कृतम् । ततः कुरुक्षेत्रमागताः । तत्र रामदासः पण्डितो गर्विष्ठो भगवता बलादनुगृहीतः । ततो व्रजं समेत्य गिरिराजमागताः । तत्र पूर्णमल्लश्रेष्ठी भगवताऽऽज्ञप्तो देवालयं कारयितुं समागतः । स आचार्यशिष्यो भूत्वा

माधवमासे शुक्लतृतीयायामालयखातं समारेभे। तत आचार्या भगवन्तं प्रसाद्य गोकुलं समागत्य तत्र स्थित्वा नारायणब्रह्मचारिणो गोकुलचन्द्रं संलाल्याऽग्रपुरे गर्जनस्य नवनीतप्रियं च प्रसाद्य ततः कान्यकुब्जमायाताः। तत्र दामोदरसेवितं श्रीद्वारकानाथं पद्मनाभसेवितं श्रीमथुरानाथं प्रीत्या समर्च्यालर्कपुरं समागताः। तत्र सोमेश्वरेण निशि विज्ञापितम्। भवता मत्संप्रदायः स्थापितोऽत्र सकुटुम्बेन निवासः कार्यः। भूमितले वैकुण्ठभूत्रयम्। चरणाद्रौ वृन्दायाः चम्पाऽरण्ये मालत्याः,अत्र धात्र्याः,एतास्त्रिविधास्तुलस्यः,वनोद्भवा कृष्णा श्वेता च। तत आचार्यैः सम्यगित्युक्त्वा प्रभाते चलितम्। ततः काश्यां गृहे समागताः॥

॥ इति तृतीया यात्रा चतुर्भिर्वर्षैः समापिता ॥

अथ मातुराज्ञया श्रेष्ठिपुरुषोत्तमदाससहायेन त्रिंशत्सहस्रविप्रभोजनकृते केशवोक्त्या संकेतध्वजमारोपितम्। तत्र कैश्चिन्मात्सर्यग्रस्तैर्विद्वद्भिः काशीविद्वज्जयध्वजोऽयमित्युद्घुष्य विवादं कर्तुं समागमनमारब्धम्। तत्र विद्यार्थिभिः खलैर्विवादे क्रियमाणे सत्रकार्यं सेवाकार्यं गृहकार्यं च विच्छिन्नं भवतीत्याचार्यैः श्रेष्ठिपुरुषोत्तमगृहे स्थित्वा पञ्चगङ्गाघट्टे सभा कारिता। ततः सप्तविंशे दिने उपेन्द्रमुख्या यतयोऽन्ये च विद्वांसः पराजिता बभूवुः। ततः पुनः खलैर्विद्भिः श्रेष्ठिगृहे स्थितानाचार्यान्प्रति पत्रिकाप्रेषणमारब्धम्। तत आचार्यैरपि पत्रिका विलिख्य विश्वेश्वरद्वारि समारोपिता। तां विलोक्य विद्वांसस्तूष्णींबभूवुः। सा खलैर्विदारिता। ततः श्रेष्ठिना राजाऽऽज्ञातस्ते भर्त्सिता अभिचारं समारेभिरे। अत्राऽवसरे हरिवंशपाठकादयोऽनुगृहीताः। भार्याया द्विरागमादिसंस्काराः कृताः। भागवतसांप्रदायिके

श्वशुरे संन्यस्य गते सुधया पञ्चदेवपूजाधनं चाचार्येभ्यो दत्तम । ततो जाता श्रीगोकुलेश्वरप्राप्तिः। ततो महेशाज्ञयाऽऽर्यैः काश्याः प्रचलितम । चरणाद्रौ शङ्करकर्मन्दी सांप्रदायिकार्थनया जितः। ततोऽलर्कपुरे समागताः । तत्राऽऽवासः कृतः । ततो व्रजसमागमने सारस्वतसूरदासोऽनुगृहीतः । ततो गोकुलेप्यावासं विधाय गिरौ समागताः । तत्र कृष्णदासमनुगृह्य मण्डपादिपुरस्सरं कृष्णभट्टमाचार्यत्वे निवेश्य गणकत्वे हरिमिश्रं च यज्ञः कृतः । वैशाखशुक्लतृतीयायां श्रीमद्गोवर्धनधरस्य नूत्नाऽऽलये प्रतिष्ठापनं कृतम् । तत्र वैष्णवा विद्वांसश्च वृन्दावनादितो महान्तश्चागताः । तेषां सर्वेषां दानमानादिभिः सत्कारो जातः ॥ पूर्णमल्लेन चन्दनधनयोरर्पणे कृते अधिकारी कृष्णदासः सेवायां माध्वो माधवः सशिष्यो नियुक्तः । परिचरणे पाककार्ये उदीच्यसाचीहरौ रामदासौ । कार्यान्तरे तथा ऽऽलयरक्षणे व्रजवासिनो विरक्तवैष्णवाश्च। गायने कुम्भनो नियुक्तः । ततः सकुटुम्बैराचार्यैर्गोकुले समागतम्। तत्र केशवाऽऽचार्यः शिष्यैः सह कथायां समागतः। स च वासुदेवेन साकमाचार्यैर्विश्रान्तोपरिबद्धयवनयन्त्रप्रहापणाय योगिनीपुरं प्रति प्रेषितः। तत्रत्यगोपुरे तेन निजयन्त्रं निबद्धम् ॥ तेन यवना हिन्दवोऽभवन् ॥ तदा तत्रत्ययवनेशेन मथुरास्थितयवनयन्त्रं निष्कासितुमाज्ञा दत्ता । तेन समेत्य काश्मीरी माधवः सशिष्योऽर्पितः ॥ अथाचार्यैः सशिष्यैस्ततः प्रस्थितम्। श्रीहनंदस्थानेश्वरं प्रत्यागतम् । तत्र विरुद्धाऽऽचारं रामानन्दं भगवता स्वीकृतं स्वीकृत्य पुनर्गोकुलं समेत्य संकर्षणं महिलार्थनया गर्भे समागतं वीक्ष्य शकागमनभीतिमिषेण निजकुटुम्बं निजप्रभूंश्च वासुदेवयादवादिभिरलर्कं प्रति प्रस्थाप्य स्वयमपि दामोदरादिभिः प्रस्थिताः। प्रयागं संप्राप्य कृष्णदासं संप्रेष्य संपादितस्थानविशुद्धिं कारयित्वा तत्र

प्राप्ता न्यवसन्। गर्भिण्याः संस्कारान् विधाय विक्रमार्कतो हयग्न-
शररसामितेऽब्दे १५६७ आश्विनकृष्णद्वादश्यां श्रीगोपीनाथे प्रादुर्भूते
तस्य संस्कारान् दीक्षां चाकलयन्। अथ काशीं समेत्य ज्योतिष्टोम-
यागसाधनाय श्रेष्ठिपुरुषोत्तमदासं नियोज्य ऋत्विक्परीक्षार्थं निज-
गृहं समागताः। तत्र उपाध्यायं विष्णुचितं शम्भुभट्टं पुरस्कृत्य
काशीपत्यादयो द्वादशर्त्विजः परीक्षिताः॥ अथ देशात् समाहूता
जनार्दनादयः समागताः। तत्र सर्वेषां शोकापनुत्तये रामकृष्णो मातृ-
पादेभ्यस्तदध्वै वैकुण्ठस्थो विशेषतो दर्शितः। अन्यैरपि दृष्टः॥
ततः प्रयागे सोमयागार्थं शालाशिबिरादिस्थानसंपत्तिः कारिता। तत्र
स्वकीयान् सर्वान् कार्येषु न्ययोजयन्। यथा श्रीमातृपादान् भगवत्से-
वायाम्, औपाध्याय्ये विष्णुचितम्, यज्ञे तत्सुतम्, अध्वर्युं माधवम्,
होतारं शाकलम, भागिनीपतिं महेश्वरं ब्रह्माणम, भामं रामेश्वरमुद्गा-
तारम्, काशीपतिं ब्राह्मणाच्छंसिनम्, देवंभट्टस्य पुरोधसमच्युतं
पोतारम्, पप्पुभट्टमाग्नींध्रम, केशवं ग्रावस्तुतम, माधवस्यानुजं
मुरारिमच्छावाकम्, शाकलं नागनाथं नेतारम् चिन्नाभट्टं स्थातारम्,
बृहस्पतिं प्रशास्तारम,शम्भुभट्टं प्रस्तोतारम्, त्रिविक्रमं प्रतिहर्तं कृष्ण-
भट्टं सुब्रह्मण्यं वामनमेतान् ऋत्विजः कृत्वा जनार्दनं सभाध्यक्षम्,
माधवं दानाध्यक्षम्, मेघनकृष्णं कोशाध्यक्षम्, श्रेष्ठिपुरुषोत्तमं कार्या-
धिकारिणम्, तत्सुतं गोपालदासं विप्रमच्युतं भाण्डागाराधिपम्
विद्याधराचार्यमतिथिपूजकम्, सरस्वतीं पाककर्त्रीम्, कृष्णभट्टं
परिचारकम, सुभद्रां परिवेषिकाम्, हरिकृष्णं निजशुश्रूषकम्, पूर्णां
माहालक्ष्मीं शुश्रूषिकाम्, विरक्तान् भगवान्दासं वासुदेवं यादवंच रक्षकं
अत्र यागे नियुज्य समागतानां दानमानैश्च सर्वेषां सत्कारः कारितः।
ततो बह्वयो दक्षिणा दत्ताः। एवं यागं समाप्य स्नानं विधाय गृहे

समागताः । अथ कदाचिदाचार्याणां जठरे व्यथा जाता ॥ तदा शिष्यैरौषधमानीतम् । तैर्वह्नौ क्षिप्तम् । ततो व्यथा निवृत्ता । अथ कदाचिद्व्रजगमनेऽघमर्षणं प्राप्ताः । तत्र कश्चिद्विष्णुमुनेः शिष्यस्तपस्विराट् श्रीमदाचार्यानस्तौषीत । विमानमारुह्य वैकुण्ठं गतः । ततो व्रजयात्रा कृता । ततः श्रीवधूजितैकदार्याः प्रार्थिताः । श्रीमद्भिः श्रीगोकुलेशाविर्भावाय तदर्चनायाचार्यैरुपादिष्टा तत्कुर्वती पुनरेकदाह । श्रीगोकुलेशो मदनमोहनश्च मां हसति जिह्रेति तत्र कारणं ब्रूथ । आर्याआहुः । जातस्ते मनोरथः । प्रादुर्भावोऽचिराद्भविष्यतीति । ततः सकुटुम्बैर्जगदीशयात्रार्थं प्रस्थितम् । वाराणस्यां स्थित्वा जगदीशयात्रां कृत्वा वाराणस्यामुपागतम् । अथ सकुटुम्बाश्चरणाऽद्रिं प्राप्ताः । तत्र भगवतो व्यापिवैकुण्ठलीलाभिव्यक्तिः समभूत । तत्र संवत् १५७२ द्विसप्तत्युत्तरपञ्चदशशतेऽब्दे महालक्ष्म्यां गोस्वामिश्रीविठ्ठलनाथानां प्रादुर्भावः समभवत । तस्मिन्समये श्रीविठ्ठलनाथस्वरूपमाप्यागतम् । नन्दालयोत्सवो जातः । ततोऽलर्कपुरं समागताः । तत्रैषां सँस्काराः समभवन् । अथ पुनर्व्रजयात्रा कृता । ततः श्रीगोपीनाथयज्ञोपवीतमहोत्सवः समभूत । ततो गर्जनधावनेन नवनीतप्रियानयनं कृतम् । ततो निजाशिष्यैः सहाचार्यैस्तण्डिवितण्डिर्विजित्य विद्रावितः । अथ वधूजितो मातृजितां गद्यप्राप्तिरभूत । वार्षिकोत्सवे मातुराज्ञापालनमेकादशीपालनं च कृतम् । ततो जगदीशयात्रायां गङ्गासागरप्राप्तिः । कृष्णचैतन्यमिलनम् । रथयात्रोत्सवो जातः । ततो जगदीशात्प्रत्यागमनं चाभूत । ततो हरिद्वारयात्रा । तद्यात्रायामार्यैर्योगमायया सर्वान् प्रस्वाप्य वैष्णवानां विरक्तानां केतुकमण्डलुलकुटालोकिकेवलरामभगवान्दासादीनां पूर्वं पर्वस्नानं कारितम् । ततः पुनरलर्कपुरे समागमनमभूत् । तत्र कविराजाशीक्षणं कृतम् । कान्यकुब्ज-

परमानन्दमनुगृह्य लीलादर्शनं च कारितम् । ततो व्रजयात्रायां सन्तदासानुग्रहः कृतः । ततो व्रजात्कुरुक्षेत्रगमनं जातम् । ततो गुर्ज्जरदेशे चक्रदोलरोहणेन तैर्यवनेश्वरो धर्षितः । ततो गोपालदासगङ्गादीनामनुग्रहो द्वारकायात्रा व्रजागमनं च कृतम् । ततो हरिमूर्तिनयनम् । अलर्कपुरागमनं चानुष्ठितम् । ततः श्रीविठ्ठलेशानां यज्ञोपवीतोत्सवः कृतः ।

इति पूर्वचरित्रावच्छेदः ।

ततः श्रीद्वारकेशागमनं जातम् । ततो गोपीनाथयात्रा जाता । तेषां दक्षिणे विवाहोऽपि पितृव्यजनार्दनेन कारितः । तत आचार्याणां जगदीशयात्रा जाता । तत्र गङ्गासागरसंगमे तृतीये सुबोधिनीपूरणं प्रथमाऽऽज्ञा चाभूत् । ततः पुनर्व्रजागमनम । तत्र गोपीनाथागमनम् । श्रीगोवर्धननाथालये यात्रिकधनसमर्पणं गोपीनाथवध्वाश्च दीक्षणं जातम् । ततः श्रीगोपीजनवल्लभभोगसमर्पणारम्भो जातः । ततः पुनर्व्रजयात्रायां मधुवने द्वितीयाऽऽज्ञा जाता । भवद्भिर्लीलायामागन्तव्यम् । ततोऽग्रपुरे द्विवेद्युत्तमश्लोकसाचीहरोपर्यनुग्रहः कृतः । कडापुरे अम्बाक्षत्रियोपर्यनुग्रहश्च । अथालर्कपुरे निवसद्भिर्भगवदाज्ञातो दशमसुबोधिनी पूरिता । एकादशे समारब्धा । मातृचरणेभ्यो वृत्तं ज्ञापितम् । ततस्तृतीयाज्ञा जाता । ततः सभायां मातृचरणेभ्य उपदेशो दत्तः संन्यासनार्थना च कृता । ततो मातृशोकापनयनं विहितं वधूजितां च । श्रीगोपीनाथस्य आचार्यसिंहासनारोहणं कारितम् । दामोदरादिभ्यः शिक्षा दत्ता । भवद्भिर्विठ्ठलनाथो रक्ष्यः शिक्ष्यश्च । ततो वधूजितां प्रबोधनं समाचरितम् । निजान्तःकरणप्रबोधनं च । ततो दामोदरादीनां सह यानार्थं संन्यासग्रहणार्थं चार्थना जाता । अथाचार्यैर्युष्माकं भागवतसंन्यासोऽस्त्येव मत्कार्यार्थमुद्धवादिवदिहैव स्थातव्यमित्युक्त्वा संन्यासनिर्णयः श्रावितः ॥

तत्र भक्तानां विरहानुभवार्थं संन्यासो भवति, रसात्मा सर्वत्र स्फुरति, तेन नर्तनगायनहसनरोदनमौनादि विधीयते । सर्वेषां तद्भावना च क्रियते । ततस्तूष्णींभावेन ध्याननिष्ठया स्थीयते । अथ साधारणैर्मातृपितृगुरुकुलशुद्धैर्गर्भाधानादिसंस्कृतैर्विधिवदधीतवेदवेदाङ्गैः कृतानिषिद्धानिष्कामानित्यनैमित्तिकैर्ब्रह्मनिष्ठश्रोत्रियगुरुसमाश्रितैर्विधिना त्रैवर्गिकं कर्म परित्यज्य संध्यावन्दनदेवार्चनवेदाभ्यासमात्रपरैर्ब्रह्मभावनैकरतैः शमदमादिनिष्ठैः कुटीचकादिक्रमेण संन्यासो विधेयः । तत्र शिखासूत्रयज्ञोपवीतधारणं काषायत्रिदण्डादिपुरःसरं संन्यासग्रहणं ब्राह्मणस्यैव । काषायत्रिदण्डधारणविधुरमेतत्क्षत्रियवैश्ययोरपि । भागवतब्राह्मणभगवद्गुरुपरिचर्यात्मकस्तद्दासभावनारूपश्च सर्वत्यागपूर्वकशुक्लवस्त्रधारणादिपुरःसरं संन्यासधारणं शूद्रस्यापीत्येवं संन्यासनिर्णयस्तेभ्यः श्रावितः ।

ततो माध्वसंप्रदायी विष्णुस्वामिमतानुयायी भगवदनुगृहीतो माधवेन्द्रयतिः समागतः । तस्य प्रशंसादि विधाय निवासितः । तन्मुखात्संन्यासधर्माः श्राविताः । अथ माधवोपाध्याय आचार्यैराहूतः पृष्टश्च । भागवतसंन्यासपद्धतिः कुत्रास्ति? । तेनोक्तम् । वल्लभदीक्षितविहिता भवद्गृहेऽस्ति । श्रीगोपीनाथदत्तया पद्धत्या पूर्वाङ्गोत्तराङ्गविशिष्टः संन्यासस्तेन कारितः । तत्र यतिमाधवेन प्रेषो दर्शितः । पूर्णानन्देति नाम च कृतम् । कुटीचकाश्रमं गृहीत्वा काषायाम्बरास्त्रिदण्डधारिणः शिखासूत्रयज्ञोपवीतवन्तः स्नानसंध्याभगवत्पूजनादिकर्म कुर्वाणा निजगृहे भुञ्जानास्तदीयाचारनिष्ठा निजाऽऽसिकायां षट् दिनानि तस्थुः । यतिधर्मानाचेरुः । ततो बहूदकाश्रमं गृहीत्वा गङ्गातीरे वसन्तः स्वसंबन्धिनां गेहे भिक्षां कुर्वन्तो दिनाष्टकं तस्थुः । ततोहंसाश्रमं समासाद्य काशिकां प्रति प्रस्थिताः । तत्र

वैष्णवब्राह्मणानां सप्तौकोभ्यो भार्जितधान्यसक्तुफलादि समाहृत्य भगवते निवेद्य भूतेभ्यो विभज्य तीर्थवारिसिक्तं समश्नन्तः समागत-वैष्णवसमाजं पृष्ठतोऽग्रतः कुर्वन्तो मार्गे प्राप्तभगवदुत्सवान् स्वीयैः कारयन्तस्तैः कृतामाचार्यपूजां देवराजविभूत्या स्वीकुर्वन्तः शङ्खघण्टा-दिनादैर्गद्यादिभिरुपश्लोकिता अष्टादशभिर्दिनैः काशिकां प्राप्ताः । तत्र हनुमद्घट्टे सप्त दिनानि पारमहंस्ये स्थिताः । तत्र कोपीनाच्छादनमात्रं धृत्वा जले प्रविष्टाः। तावद्गोपीनाथादयः प्राप्ताः। तैरस्माभिः किं कार्यम्?। इत्युक्ते खडिकया शिलायां सार्द्धश्लोकत्रयं लिखितम् । ततो नाभि-मात्रजले निमीलितलोचनाः परमानन्दविग्रहं पुरुषोत्तमं निजात्माभिन्नं चिन्तयन्तः सप्ताशीत्युत्तरपञ्चदशशतेब्दे १५८७ आषाढशुक्ले पुष्येर्के द्वितीयादिने मध्याह्ने ज्वालापुञ्जमार्गेण दिवि तौर्यत्रिके जाते पुष्पवृ-ष्ट्यां च सत्यां व्यापिवैकुण्ठमवापुः । अथ पश्यतां जनानां महाना-चार्यशोकश्चासीत् । ततो माधवादिभिर्बोधिता गोपीनाथादयः शोक-मुन्मुच्य यतिधर्मेण पारलौकिकं चक्रुः । भगवल्लोके तद्गमनस्योत्सवः समजनि । अथ गोपीनाथास्तन्मर्यादां पालयन्तस्तत्सिंहासनं समा-रूढाः । तदीयैः समर्चिता भागवतधर्मं प्रचारयामासुः ॥ श्रीगोपाल-मनुपुरश्चर्यार्थं गोवर्द्धनं समेत्य श्रीनाथं सिषेविरे । ततो निजतनयं पितृव्यनिकटे विसृज्य जगन्नाथं गताः । तन्मुखे प्रविष्टाः । ततः पुरुषोत्तमं बालं विज्ञाय सर्वैः श्रीविट्ठलनाथाचार्याः सिंहासनारूढाः कृताः । अथ श्रीगोपीनाथमहिलया देवराड्विरोधमुत्पाद्य आचार्य-पुस्तकचयं धनादिकं च निगूहितम् । ततः श्रीविट्ठलनाथैर्दामोदरदा-साच्छ्राद्धदक्षिणायां स्वासिद्धान्तोऽवगतः पुस्तकानि च मुखाल्लेखायि-तानि द्रव्यं च वैष्णवेभ्यः संचितम । भट्टानां संमत्या श्रीः स्मार्तधर्मः

प्रवर्तितः । तातपादानामभिप्रेतो दामोदरसंमत्या पुष्टिभक्तिधर्मःप्रचारितः॥

चतुरशीति (?) स्तद्ग्रन्थाश्चतुरशीतिरासिकाः ॥
चतुरशीतिरस्तद्भक्ता आहुरार्यास्तु तत्कथाः ॥ १ ॥

यथाश्रुतं विलिखितमाचार्यचरितं क्रमात् ॥
चरित्रविजयाख्येऽस्मिन्संप्रसीदन्तु तेऽमुना ॥ २ ॥

श्रुत्वा निजाचार्यकथा निजेभ्यो देशे विदेशे च बहुश्रुतेभ्यः ॥
संक्षिप्य गूढा लिखिताः प्रसिद्धाः कः कृत्स्नशस्ता लिखितुं क्षमः स्यात ३

वसुबाणरसेन्द्वब्दे १६५८ तपस्यासितके रवौ ॥
चमत्कारिपुरे पूर्णो ग्रन्थोऽभूत् सोमजातटे ॥ ४ ॥ श्रीरस्तु ॥

इति श्रीमदाचार्यचरणैकशरणगोस्वामि-
श्रीयदुनाथसंगृहीते श्रीमदाचार्य-
लघुचरित्रविजये उत्तरचरित्रा-
वच्छेदः समाप्तः ॥

## समाप्तोऽयं ग्रन्थः



॥ श्रीमते गिरिवरधरणाय नमः ॥

# अथ श्रीवल्लभदिग्विजयभाषाप्रारम्भः

श्रीमदाचार्य ( श्रीवल्लभाचार्यजी ) के चरणकमलयुगलको प्रणाम करके ( श्री ) यदुनाथ ( जी ), गुरु ( श्रीवल्लभाचार्यजी ) के चारित्रविजय को संग्रह करते हैं ॥ १ ॥

श्रीअगस्त्यमहर्षि से पालित परमपवित्र दक्षिणदिशामें स्तम्भाद्रिके समीप परम समृद्ध काकुम्भकर इस नाम से प्रसिद्ध बडी भारी नगरी है ॥ वहाँ भारद्वाज महर्षि के वंशमे उत्पन्न हुए, तैत्तिरीयशाखाध्यायी, त्रिप्रवर, और जिनकी कुलदेवता रेणुका है, ऐसे वेल्लनाड् तैलङ्ग ब्राह्मण निवास करते थे। उस पवित्र ब्राह्मण कुलमें श्रीगोविन्दाचार्यके अनुगृहीत आचार्य श्रीवल्लभभट्टजी के वंशमें, मानों महर्षि वेद-व्यासजीकी दूसरी मूर्ति और वेदके अवतारभूत दीक्षित श्रीयज्ञनारायणभट्टजी हुए। उन्होंने बाल्यावस्थामें ही सब वेदशास्त्रोंका अध्ययन कर देवपुरमें रहनेवाले सुधर्म-शर्मोकी नर्मदा नाम्नी सुलक्षणा कन्यासे विवाह किया।

एक समय उनके पास द्रविड देशमें रहने वाले परमवैष्णव विष्णुमुनि आये। भट्टजीने उनका स्वागत-सत्कार किया। अनन्तर जब विष्णुमुनि सुखसे विराजगय तो कहने लगे कि " भक्ति मीमांसाग्रन्थ " के विचारने से मुझे वैराग्य प्राप्त हुआहै और उस मीमांसा ग्रन्थकी मैंने " भक्त्युल्लासिनी " व्याख्याभी बनाई है। यह सुन-कर यज्ञनारायणजी ने भक्तिधर्मकी प्राप्तिके लिये प्रार्थना की। मुनिने प्रसन्न होकर विष्णुस्वामी, विल्वमङ्गल और दिवोदासके सम्प्रदायसे प्राप्त श्रीगोपालमनुका उपदेश किया और वहाँसे पधारे। तदनन्तर भट्टजीभी श्रौत स्मार्तधर्मोंके साथही साथ प्रेम सहित निजकुलदैवत ( श्रीगोपाल ) की परिचर्या करने लगे। आप प्रतिवर्ष सोमयाग पर्यन्तके प्रकृतियाग[1] किया करते थे। किसी समय सोमयज्ञमें सोमाहुति

---

[1] अग्निहोत्र, दर्शपूर्णमास, पशु, चातुर्मास्य, सोम, ये पाँचों प्रकृतियाग कहलातेहैं। आप प्रतिवर्ष पाँचों यज्ञ करते थे।

करते हुए अग्निमण्डलमें अति श्रद्धासे भगवान् वासुदेवका ध्यान करते थे कि इतनेमें उनने उसी अग्निमण्डलमें परम रमणीय वराभयमुद्रासे विराजित पीताम्बरधर कमल नयन विप्रवेषसे प्रकट हुए भगवान्को देखा। अनन्तर अत्यन्त आनन्दके साथ पृथ्वीमें पड़कर साष्टाङ्ग प्रणाम किया। जब भगवान्ने प्रबोधकराके उठाया तो हाथ जोड़कर कहने लगे।

हे भगवन्! सम्पूर्ण निगम और आगम आपका गुणगान करते हैं। देश काल--कर्ता--कर्म-मन्त्र-द्रव्य सबके नियामक तथा अभिमतफलदायक आपही हैं। यद्यपि हम यह नहीं जानते हैं कि भगवान्की परिचर्या किन उपचारोंसे करनी चाहिए, तथापि आप सहजदयालुताके कारण भजन करने वालेके मानसिक भी पत्रपुष्पादि अथवा स्वतः सिद्ध प्राप्त हुए उपचारोंसे भी समर्चित अतिप्रसन्न होकर वशीभूत होजाते हो। तदनन्तर भट्टजीने मानसिक उपचारोंसे भगवान्का समर्हण किया। और भगवान् यज्ञनारायणने उस समर्हणको ग्रहण कर वर माँगनके लिये प्रेरित किया। जब दर्शनसे ही कृतार्थ हुए भट्टजीने कुछ वर न माँगा तो श्रीयज्ञनारायणही कहने लगे। पूर्णकाम तुम्हारे अवदात (शुद्ध) यशको विस्तीर्ण करता हुआ शत सोमयज्ञ हो जानेके बाद थोडेही समयमें तुम्हारे वंशमें सद्धर्मके रक्षार्थ स्वयं मैं अवतार लूँगा। इस तरह प्रीतिसे प्रत्यर्पण करके भगवान् उसही अग्निमण्डलमें तिरोहित होगये। यह वार्ता श्रीयज्ञनारायण भट्टजीने ही अपने बनाये हुए "सत्क्रियानिबन्ध" ग्रन्थके अन्तमें लिखीहै।

*** जिसका सार यों है ***

"जो यज्ञनारायण मेरे यज्ञमें प्रत्यक्ष हुएथे। उनके चरणारविन्द युगलमें याज्ञिकोंके प्रीत्यर्थ मैंने अपने गृह्यसूत्रकी व्याख्यारूपिणी पुष्पमालाएं समर्पणकी है"

उन यज्ञनारायण भट्टजीके अनेकसद्गुणसम्पन्न सर्वतन्त्रस्वतन्त्र वेदवेदान्तज्ञ गङ्गाधर सोमयाजी इस नामसे विश्रुत पुत्र हुए। उनने ब्रह्मचर्याश्रमके पीछे वत्सगोत्री त्रिरुम्मल नामके ब्राह्मणकी काञ्चीनामक कन्याके साथ विवाह किया। इन्होंने भी मीमांसारहस्यादि अनेक ग्रन्थ निर्माण किये और सहधर्मिणी सहित यज्ञ और भक्तिसे भगवान्को प्रसन्न किया।

इनके पुत्र गणपतिसोमयाजी हुए। ये भी सकलधर्मज्ञ तथा सर्ववेदज्ञ थे। सर्ववेदाध्ययनके अनन्तर दक्षिणमथुरानिवासी वसिष्ठगोत्री केशवशर्माकी पुत्री

